अभ्यातानेति संकेतः । ॐ अग्निभूतानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याꣳस्वाहा । इदमग्नये भूतानामधिपतये न मम ।।१।। ॐ इन्द्रोज्येष्ठानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां (इत्यादिः सर्वत्र स्वाहाकारान्तो मन्त्रः पाठ्यः) ॐ इदमिन्द्राय ज्येष्ठानामधिपतये न मम ।।२।। ॐ यमः पृथिव्या अधिपतिः समावत्वस्मिन्० । इदं यमाय पृथिव्या अधिपतये न मम ।।३।। ॐ वायुरन्तरिक्षस्याधिपतिः समावत्वस्मिन्० इदं वायवेऽन्तरिक्षस्याधिपतये० ।।४।। ॐ सूर्यो दिवोऽधिपतिः समावत्वस्मिन्० इदं सूर्याय दिवोऽधिपतये०।।५।। ॐ चन्द्रमा नक्षत्राणामधिमतिः समावत्वस्मिन्क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्

कर्मण्यस्यां देवहूत्याᳪंस्वाहा इदं चन्द्रमसे नक्षत्राणामधिपतये० ।।६।। ॐ बृहस्पतिर्ब्रह्मणोऽधिपतिः समावत्वस्मिन्० इदं बृहस्पतये ब्रह्मणोऽधिपतये० ।।७।। ॐ मित्रः सत्यानामधिपतिः समावत्वस्मिन्०। इदं मित्राय सत्यानामधिपतये० ।।८।। ॐ वरुणोऽपामधिपतिः समावत्वस्मिन्०। इदं वरुणायापामधिपतये० ।।९।। ॐ समुद्रः स्रोत्यानामधिपतिः समावत्वस्मिन्०। इदम् समुद्राय स्रोत्यानामधिपतये० ।।१०।। ॐ अन्नᳪंसाम्राज्यानामधिपतिः समावत्वस्मिन्क्षेत्रेस्याम-शिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳪंस्वाहा, इदमन्नाय साम्राज्यानामधिपतये० ।।११।। ॐ सोम औषधीनामधिपतिः समावत्वस्मिन् । इदम्-सोमायौषधीनामधपतये० ।।१२।। ॐ सविता प्रसवानामधिपतिः समावत्वस्मिन्० । इदम् सवित्रे प्रसवानामधि-पतये० ।।१३।।

ॐ रुद्रः पशूनामधिपतिः समावत्वस्मिन्०।। इदम् रुद्राय पशूनामधिपतये०।।१४।। अत्र प्रणीतोदकसम्पर्शः ।। ॐ त्वष्टा रूपाणामधिपतिः समावत्व०। इदम् त्वष्ट्रे रूपाणा मधिपतये०।।१५।। ॐ विष्णुः पर्वतानामधिपतिः समावत्वस्मिन्०।। इदम् विष्णवे पर्वतानामधिपतये०।।१६।। ॐ मरुतो गणानामधिपतये समावत्वस्मिन्०।। ॐ इदं मरुद्भ्योगणानामधिपतिभ्यः०।।१७।। ॐ पितरः पितामहाः परेवरेततास्ता महा इहमावत्वस्मिन्ब्रह्मण्यस्मिन्क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ॱं स्वाहा । इदम् पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततामहेभ्यः०।।१८।। अत्र प्रणीतोदकस्पर्शः।।

ॐ ब्रह्मा विष्णुस्तथा रुद्रो गुरुः शुक्रो विशेषतः ।
आयुर्दैर्ध्यं च सौख्यं च पुत्रपौत्रप्रवर्द्धनम् ।।

अग्निर्भूः पञ्चमे यज्ञः श्रीधरः श्रिय उच्यते ।
पुत्रा लक्ष्मीस्तथा कामः सौभाग्यं चैव जायते ।। इति उल्माहुतिः ।।

अथान्तः पटः ।। अथ गुप्ताहुतिः ।। ॐ अग्निरैतु प्रथमो देवतानाꣳसोऽस्यै प्रजा मुञ्चतु मृत्युपाशात् ।। तदयꣳराजा वरुणोऽनुमन्यताम् यथेयꣳस्त्रीपौत्रमघन्नरोदात्स्वाहा ।।इदमग्नये० ।।१।। ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।। अशून्योपस्था जीवतामस्तु माता पौत्रआनन्दमभिविबुध्यतामियꣳस्वाहा । इदमग्नये० ।।२।। ॐस्वस्तिनोऽअग्ने दिवऽआपृथिव्या विश्वानिधेह्य यथा यजत्रा यदस्यां महि दिवि जातं प्रशस्तं तदस्मासुद्रविणन्धेहिचित्रꣳस्वाहा। इदमग्नये० ।।३।। ॐ सुगन्नु पन्थां प्रदिशन्नऽएहि ज्योतिष्मध्ये ह्यजरन्नऽआयुः ।। अपैतु मृत्यु अमृतं नऽआगाद्वैवस्वतोनोऽअभयं कृणोतु स्वाहा । इदम् वैवस्वताय ।।४।। ॐ परं मृत्योऽअनुपरेहि

पन्थां यस्तेऽअन्य इतरो देवायानात् । चक्षुष्मते शृण्वते ब्रवीमि मानः प्रजा ॅं रीरिषो मौतवीरान् स्वाहा । इदम् मृत्यवे०।।५।। अत्र प्रणीतोदक-स्पर्शः।। इति अन्तः पटः ।। अभि०-

ॐ गोविन्दो गोकुले चैव क्रीडति सह गोपकैः ।
तुष्टिपुष्टिकरो नित्यमायुरारोग्यसम्पदः ।। इति गुप्ताहुतयः।।

अथ पर्वतपूजा ।।

सुमेरुश्चोत्तरे भागे ऐशान्यां शिखरस्तथा।
उदयाद्रिः पूर्वभागे आग्नेय्यां मरुतस्तथा।।
विन्ध्याचलो दक्षिणस्यां हिमालयस्तु नैर्ऋते।
वैराटः पश्चिमे भागे वायव्ये शारदः स्मृतः।।
सुमेरुम् काञ्चमयँश्चतुःशृङ्गविराजितम्।
मण्डलस्योत्तरे भागे चन्द्रमा मनसः स्मृतः ।।इति पूजयेत् ।।

चन्द्रमामनसो० ॥१॥

शिखरं च महादेवं पाण्डुरं हेमभूषितम् ।

येतेशतमित्यनेन ऐशान्यां शिखरं यजेत् ॥ ॐ येतेशतं वरुणम्० ॥२॥

उदयाचले महापीते रक्तश्वेतविभूषितम् । त्रातारमिति मन्त्रेणोदयोदयाचलं च पूजयेत् ॥ ॐ त्रातारमिन्द्रम्० ॥३॥

मरुतं च महोग्रं हि आग्नेयां कृष्णवर्णकम् ।

मरुत्वाँ ॥२ इन्द्र० मन्त्रेण मरुतं प्रतिपूजयेत् ॥ ॐ मरुत्वाँ ॥२ ऽइन्द्र० ॥४॥

विन्ध्याचलं तथा चोक्तं रक्तश्वेतविभूषितम् ।

धामच्छदग्नीति मन्त्रेण विन्ध्याचलं प्रपूजयेत् ॥ ॐ धामच्छदग्नि० ॥५॥

हिमाचलं हिममयं नैर्ऋत्यां हेमभूषितम् ॥ हिरण्यगर्भेति मन्त्रेण

हिमालयं प्रपूजयेत्।। ॐ हिरण्यगर्भःसम० ।।६।।

पाण्डवैर्गुप्तचर्यार्थमाश्रितं पश्चिमे स्थितम् ।
धन्वनागेति मन्त्रेण वैराटं च प्रपूजयेत् ।। ॐ धन्वनागा० ।।७।।

शारदं शुभ्रवर्णाख्यं ज्ञानदं करुणायुतम् ।
वायव्यां दिशि वायव्यैर्व्वायव्यानीति पूजयेत् ।। ॐ वायव्यै-र्वायव्यानाप्नोति० ।।८।।

लाजानां प्रतिमां कृत्वा पूजिताश्चाष्टपर्वताः ।
यस्मात् त्वमचलो नित्यं तथा दम्पति-निश्चलः ।।

गन्धपुष्पाक्षतैर्धूपदीपनैवेद्यैश्चोत्तरादिदक्षिणमार्गेणाष्टौ पर्वतान् पूजयेत् ।। इत्यष्टपर्वतपूजा ।।

अथ पर्वतनमस्कार : ।।

सुमेरुः कथ्यते सोममुत्तरस्यां हि तिष्ठति ।
यस्मिँश्चन्द्रश्च सूर्यश्च परिक्रामति दक्षिणम् ।।
सुमेरुः पर्वतः साक्षी वरदीर्घायुः कन्यायै भातीति (कन्या सौभाग्यं वा) ।।

शिखरः कथ्यते सोऽयमैशान्यां यस्तु तिष्ठति ।
कमलो निर्मलो दिक्षु स्वर्लोकजलपानवत् ।।
शिखरः पर्वतः साक्षी वरदीर्घायुः कन्यायै भाति ।
उदयाद्रिः कथ्यते यः पूर्वभागे हि तिष्ठति ।।

चन्द्रसूर्यौ सदा यस्मिन्नुदयं कुरुतः स्वयम् ।। त्रयस्त्रिंशत्कोटिदेवतानां नमस्कारो भवति उदयाद्रिस्तु साक्षी सः ।। वरदीर्घायुः कन्यायै भाति ।।

आग्नेये कथ्यतां सोऽद्रियोंऽस्ति आग्नेयसम्पदा ।
देवकन्याऽस्ति आग्नेये साक्षी साग्नेयपर्वतः ।।
वरदीर्घायुः कन्यायै भाति ।।
कथ्यतां स तु विन्ध्याद्रिः पूजितो दक्षिणे स्थितः ।
संध्यातिसृषु यस्मिँश्च गृहधात्री भवत्यपि ।।
विन्ध्याचलस्तु साक्षी वरदीर्घायुः कन्यायै भाति ।।
हिमालयः कथ्यते यो नैर्ऋत्यदिशि तिष्ठति ।
यस्मिं सम्पद्देवकन्या- भद्रकाली ऋषिस्तथा ।।
हिमालयपर्वतः साक्षी वरदीर्घायुः कन्यायै भाति (अथवा कन्यासौभाग्यं चेति पाठः)।।
पाण्डुराद्रिः कथ्यते यो वर्तते पश्चिमे दले ।
हिरण्यं वर्द्धते यस्मिन् भवतौ रामलक्ष्मणौ ।।

पाण्डुरपर्वतः साक्षी वरदीर्घायुः कन्यायै भाति ।
शारदः कथ्यते योऽसौ वायव्ये सम्पदायुतः ।।
दुर्योधनादयो यस्मिन् पर्वतस्थैर्यकारकाः ।
शारदपर्वतः साक्षी वरदीर्घायुः कन्यायै भाति ।।

अथ कन्याहस्तेन लाजाहुतिः ।। अथ कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाऽञ्जलावापूरयति वा वपति ।। तान् कन्या करलाजां जुहोति वारत्रयम् ।।ॐ अर्य मणं देवकन्या अग्निमयक्षत। स नो ऽ अर्यमा देवः प्रेतो मुञ्चन्तु मे पतेः स्वाहा ।। इदमग्नये ।। पुनः-।।१।। ॐ इयन्नार्युपब्रूतेलाजानावपन्तिका ।। आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ।। इदमग्नये स्वाहा इदमग्नये ।।२।। पुनः, ॐ इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव मम तुभ्यं च संवननं तदग्निरनुमन्यतामियंँस्वाहा इदमग्नये ।।३।।

सर्वदेवमयोवह्निस्तृप्यतां लाजहोमतः ।
दोषैर्युक्ता गुणैर्मुक्ता तव भार्या सदा प्रिया ।।

इति लाजाहुतिः समाप्तः ।।

## अथ पाणिग्रहणम्

अथ वरः कन्यायाः सांगुष्ठं हस्तमुत्तानं वामेन पाणिना दक्षिणेन सम्यग्गृहीत्वा– वधूश्रीजाता वरश्रीजाता-ॐ गृभ्णामीत्यादीनां चतुर्णां याज्ञवल्क्यभरद्वाजाऽथर्वणप्रजापति ऋषयो विष्णुर्देवताऽनुष्टुबुष्णिगनुष्टुब्यजुश्छन्दांसि पाणिग्रहणे विनियोगः।। ॐ गृभ्णामि ते सौभगत्वाय हस्तम्मया पत्या जरदष्टिर्यथा सः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वा ऽदुर्गार्हपत्याय देवाः ।।१।। ॐ मोऽहमस्मि सात्सक्ष्सात्वमस्य मोऽअहम् ।। सामाहमस्मि ऋक् त्वं द्यौरहं पृथ्वी त्वम् ।।२।। ॐ

तावेव विवहावहै सह रेतो दधावहै प्राजां प्रजनयावहै पुत्रान् विन्द्यावहै बहून् ।।३।। ॐ ते सन्तु जरदष्टयः संप्रियौ रोचीष्णू सुमनस्यमानौ पश्मेम शरदः शतञ्जीवेम शरदः शतꣳश्रृणुयाम शरदः शतम् प्रब्रबाम शरदः शतमदीनाः श्याम शरदः शतं भूयश्च शरदः शतान् ।।इति।।

अथ वरः कन्याया दक्षिणपादमश्मानमारोहयति उत्तरतोऽग्नेः ।।

अथ शिलापूजा---

तमालपुष्पप्रतिनेत्रशोभा सुशीतनीलोत्पलयुग्महस्ता ।
समस्तपाथोनिधि-मध्यमध्याद् हरे समागच्छ वरप्रदात्री ।।
भूरसि०।।१।।

माता च वसुधा देवी पिता देवो जनार्दनः ।
त्वमेव शरणं चाऽस्मिन् सर्वान् कामानवाप्नुयात् ।।
ॐ अश्मा च मे० ।।

विवाहे (देहल्यां) स्थापिता शिला प्रस्थिता तव मन्दिरे ।
भोगाँश्च विपुलान् देहि पुत्र-पौत्रप्रवर्द्धिनी ।।

ॐ आरोहेममश्मानमश्मेवत्वꣳस्थिरा भव ।। अभितिष्ठ पृतन्यतोऽ-वबाधस्व पृतनायत ।।

अथ शिलानमस्कारः ।। प्रथमशिला सत्त्वगुणसमन्विता हंसवर्णा शुद्धस्फटिकसंकाशाऽऽदर्शश्रीसहिता जगदुत्पत्तिकारकब्रह्मसावित्री-स्वरूपा एतादृशी त्वं साक्षिणी वरदीर्घायुः कन्यायै भाति। (अथवा कन्या सौभाग्यं च) ।।१।।

द्वितीयशिला रजोगुणसमन्विता तस्यां रजोनिधाय रक्तवर्णा रक्तोत्पलसदृशा संदर्शन श्रीसहिता जगद्व्यापकविष्णुलक्ष्मीस्वरूपा एतादृशी शिला त्वं साक्षिणी वरदीर्घायुः कन्यायै भाति ।।२।।
तृतीयशिला तमोनिधाय कृष्णवर्णा नीलोत्पल-संकाशा संदर्शनश्रीसहिता

जगद् व्यापकपञ्चकारणशम्भुपार्वतीस्वरूपा एतादृशी शिला साक्षिणी इह वरदीर्घायुः कन्यायै भाति ।।

अथ गाथां गायति -

पुराणे कथिता गाथा नारदाद्यैर्महर्षिभिः ।
तत्सर्वं मधुरं तस्य भगवन्नाम गङ्गलम् ।।१।।
मङ्गलं भगवान् विष्णुर्मङ्गलं गरुडध्वजः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलायतनो हरिः ।।२।।
अचलममलवर्णं वत्सरूपं दुहे मां ।
निगदति मयि गुह्यं गुह्यमेकं सुसूक्ष्मम् ।।
अचलमपि सुसत्वाद्येऽपि पश्यन्ति ये माम् ।
अचल- सममबाधं वासुदेवं सुरेशम् ।।३।।

सकलभुवननाथं शार्ङ्गिणं चक्रपाणिं
सरसिजविमलाक्षं श्यामवर्णं मुरारिम् ।।
प्रणयमयमनन्तं पद्मनाभं मुकुन्दं
गणपतिहरगम्यं धर्मगाथाभियुक्तम् ।।४।।
हृदयकमलमध्ये दीपवद् वेदसारे
प्रणयमयमतर्कं योगविद्याऽवगम्यम् ।।
हरिगुरुशिवयोगो यस्य गान्धर्व एष
सुकृतमयमछाद्यं ध्यायते तेजःपुञ्जम् ।।५।।
हृदयकमलमधोमुखं

किं प्रकारके वेदसा रे ? किं प्रमाणको दीपः ? अंगुष्ठ प्रमाणको दीपः ।। केनैव देवाः प्रमाणयन्ति अर्कं ? किं प्रमाणयति कथयति? एक विंशति ब्रह्माण्डखण्डेषु सप्तदीपवत्सु सूर्यः किरणोऽयं न पश्यति

देवसारे पश्यति वत्सरूपे करसंपुटिनि आदित्येऽर्कः। किं प्रकारे वेदसारे? अगम्या योगविद्या च नैव कुर्युस्तपोऽमराः । हरिनारायणगुरुर्महादेव-ब्रह्मध्यानं कुर्यात् ।।

न गङ्गा न गया सिन्धुर्न काशी न च पुष्करम् ।
जिह्वाऽग्रे सततं यस्य हरिरित्यक्षरद्वयम् ।।
गोकोटिदानं ग्रहणेषु काशी प्रयाग-गंगाऽयुतकल्पवासः ।
यज्ञायुतं मेरुसुवर्णदानम्, गोविन्दनाम्ना न कदापि तुल्यम् ।।
गोविन्देति सदा स्नानं गोविन्देति सदा जपः ।
गोविन्देति सदा ध्यानं सदा गोविन्दकीर्तनम् ।।
अच्युतानन्त-गोविन्द नामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाःसत्यं सत्यं वदाम्यहम् ।।

सत्यं सत्यं पुनः सत्यं भुजमुत्थाप्य चोच्यते ।
नास्ति वेदात् परं शास्त्रं न देवः केशवात्परः ।।
जन्मकाले व्रते चैव विवाहे शुभकर्माणि ।
शुभयोगे महातीर्थे ह्यथ सर्वत्र गीयते ।।

विष्णुस्तोत्रं दशावतारस्तु पठेत् इत्यादि ततो विष्णुगाथां गायेत् ।। ॐ सरस्वति प्रेदमव सुभगे वाजिनीवती । यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः ।। यस्यां भूतꣳसमभवद्यस्यां विश्वमिदं जगत्।। तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः ।। इति गाथा समाप्ता।।

अथ परिक्रमणमंत्रः-ॐ तुभ्यमग्ने पर्यवहन्सूर्याविहतु ना सह । पुनः पतिभ्यो जायांदाऽग्ने प्रजया सह ।।

कन्याभातृदत्तैरवशिष्टलाजैः सूर्पकोणेन जुहोति ।। ॐ भगाय स्वाहा इदं भगाय न मम । तूष्णीं परिक्रमणम् ।। ॐ प्रजापतये

स्वाहा० प्रातरग्निम्प्रातः० ।।

तृप्यतां देवताः सर्वा लाजाहोमात्त थैव च ।
इन्द्रोवायुर्भगश्चैव लाजादाकाश एव च ।। अथैनामुदीचीं सप्तपदानि प्रकामयति ।। उत्तरोत्तरं मंत्रं वरः पठति ।।

## अथ सप्तपदीपूजा

ॐ आवाहयाम्यहं चार्त्रि विवाहे पूजिते पदे ।
मम रक्षाकरं नित्यमत्रिं वै पूजयाम्यहम् ।। ॐ आदित्यं गर्भ० ।।
ॐ आवाहयाम्यहं देवं वसिष्ठं मुनिसत्तमम् ।
चन्द्रसूर्यस्वरूपेण सदा त्वं रक्ष मां द्विज ।। वातोवामनोवा० ।।
अंगिरा मुनिमुख्यश्च त्रिषु लोकेषु पूजितः ।
दम्पत्योर्जयदातारं मुनिं तं पूजयाम्यहम् ।। गायत्री० ।। ३ ।।

विश्वामित्र त्वमागत्य चरितं कृष्णसूचितम् ।
छलितोऽपिऽहरिश्चन्द्रश्चतुर्वेदाः समुद्धृताः ।।ॐ अग्निमीडे० ।।४।।
पराशरसुतो व्यासो मत्स्यगर्भसमुद्भवः ।
मम यज्ञं समारक्ष पूजयामि महामुने ।। सोमोधेनु० ।।५।।
भारद्वाज ऋषिश्रेष्ठ आगच्छ यज्ञमण्डले।
ऋतुषड्भिः शरीरेण ररक्ष यज्ञवाटिकाम् ।। ॐ वसन्तेन० ।।६।।
सप्तर्षिषु च यः श्रेष्ठो दुर्वासा मुनिसत्तमः ।
आगच्छ मुनिकल्याण पूजितस्त्वं पदे पदे ।। सप्तऋषयः० ।।
अत्रिश्चैव वशिष्ठश्च अङ्गिरा मुनिसत्तमः ।
विश्वामित्रस्तथा व्यासो भारद्वाजस्तथैव च ।।
दुर्वासाश्चैवब्रह्मर्षिः पूजिताः सप्तमे पदे ।।७।।

अथ पञ्चोपचारैः पूजा- ॐ एकमिषे विष्णुस्त्वा नयतु हे सखेसप्तपदी प्रथमे पदे गरुडवाहन परमेश्वरोलक्ष्मीं यथा तद्वन्नयतु त्वां असत्यहारिणी सत्यप्रकाशा भव विष्णुः साक्षी वरदीर्घायुः कन्यायै भाति ।।१।। द्वे ऊर्ज्जे विष्णुस्त्वा नयतु हे सखे द्वौ चन्द्रसूर्यौ कथ्यतां यथा सूर्यस्य रथचक्रेण दैत्यरथा दलितास्तथा शत्रुरथदलनी भव । द्वौ चन्द्रसूर्यौ साक्षिणौ वरदीर्घायुः कन्यायै भाति ।।२।। त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु । हे सखे कथ्यताम् स्वर्गमर्त्यपातालानि त्रीणि त्रिलोकी साक्षणीवरदीर्घायुः कन्यायै भाति ।।३।। ॐ चत्वारि मायोभवाय- विष्णुस्त्वा नयतु । हे सखे, चतुःशृङ्गो महावृषभः कथ्यताम् । असत्यहारिणी सत्यप्रकाशा भव ऋग्यजुःसामाथर्वश्चत्वारो वेदाः साक्षिणः वरदीर्घायुः कन्यायै भाति ।।४।। ॐ पञ्चपशुभ्यो विष्णुस्त्वा

नयतु । हे सखे ! पञ्चपरमेश्वरात्मनः पशवः संसार-विषयसुखकारणानि असत्यहारिणी सत्यप्रकाशा भव । पञ्चपशवः कथ्यताम्–लक्ष्मीः सुरा सुमनसा सुशीला सुरभिस्तथा।। एताः पञ्चपरमेश्वरात्मनः साक्षिणीः वरदीर्घायुः कन्यायै भाति ।।५।। ॐ षड्ऋतुभ्यो विष्णुस्त्वा नयतु। हे सखे रजनी कथ्यतां रात्रेरधिपतिश्चन्द्रमसऋतुकलादिव्यमानाभवन्ति षट् षट् कथ्यताम् ।। वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराः षड्ऋतवः साक्षिणः वरदीर्घायुः कन्यायै भाति ।।६।। ॐसखे, सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु । हे सखे, गौतमभरद्वाज-विश्वामित्रकाश्यपजमदग्नि अत्रिवशिष्ठाः कथ्यन्ताम् ।। असत्यहारिणी सत्यप्रकाशा पदे भव सप्तऋषीश्वराः साक्षिणः वरदीर्घायुः कन्यायै भाति ।।७।। इति सप्तपदी-पूजा ।।

## अथाऽभिषेचनम्

सङ्कल्पैरर्चिता नारी विवाहे सप्तमे पदे ।।
तव दासी च स्वामी च तव चित्ते प्ररोहति ।। सत्यम् २ पुनः पठेत् । ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमिति आपोहिष्ठेति च तिसृभिः ।।

वरः कन्यां प्रति कथयति 'सूर्यमुदीक्षस्वेति'।। वरेणोक्ता सती सा कन्या सूर्यमुदीक्षते तच्चक्षु० इति मन्त्रेण ।

वरो दक्षिणहस्तेन कन्याया दक्षिणांशमधिहृदयालम्भं करोति । ॐ मम व्रते ते हृदयं दधाति मम चित्तमनुचित्तं ते अस्तु मम वाचमेकमना जुषस्व प्रजापतिस्त्वा नियुनक्तु मह्यमिति ।।

## अथ सिन्दूरार्पणम्

### अथ दिन्दूर-पूजा-

आवाहयाम्यहं देवं विवाहे परमं पदम् ।
केशवस्य तथा वाक्यपितामहमितिस्थितिः ॥
सर्वं शास्त्रं पठेद्विप्रः सिन्दूरेण च पूजनात् ।
विवाहश्च भवेत् पूर्णस्तस्य कर्म समापयेत् ॥
हरिद्रागतितत्पूर्णम् द्वारपाल्येकचक्षुषि ।
दुहित्राकृतिनामापि सिन्दूरं च विवाहकम् ॥
वामांगी कुरुते कान्तां सिन्दूरद्वयपूजिताम् ।
एकप्राणःस्त्रियाःसाक्षी पुरुषो यज्ञविप्रकः ॥

विप्र उवाच- अनेकञ्च महासाक्षी भाग्यं च पूर्वजन्मकम् ।
तव दाने महापुण्ये ह्यद्यावधिस्त्रियाधनम् ।।
आचार्य उवाच-जीवद्वत्सा दधि त्वं च हेमन्ते धान्यतण्डुलान् ।
ताम्रपात्रं ससिन्दूरं वेदवेदांगपारगः ।।
विना वेदं कथं यज्ञो विना तोयेन बीजकम् ।
विना धनं कथं सौख्यं विना भार्या कथं गृहम् ।।
विना दानं कथं नाम, कथं स्त्री पुरुषं विना ।।
विनाज्ञानं कथं स्वर्गं कथं प्रीतिर्मनो विना ।
विनाप्रीतिः कथं भार्या, विना भार्या कथं गृहम् ।।
विप्र उवाच- क्रोधभाषा यथा वन्ध्या हीनबुद्धिबलस्य ते ।
पादार्घाचमनं कुर्यान्मधुपर्कस्य भोजनम् ।।

स्थिरोभवेति मन्त्रेण सिन्दूरं पूजितं स्त्रिया ।
पुरुषसूक्तमन्त्रैश्च सिन्दूरं द्वयपूजितम् ।।

वर उवाच- वस्त्रेण वेष्टितो भार्या उत्तिष्ठेदासने तथा ।
वरो हस्तेन ददते पादजङ्घशिरस्यथ ।।
ताम्रपात्रं च सिन्दूरं वेदवेदाङ्गपारगः ।।

कान्तोवाच- महाप्रीतिर्महासौख्यं तव हस्तेन देहि मे ।
संगिनीमायनं चैव कन्दर्पो मम दीयताम् ।।

वर उवाच- न च वन्ध्या परद्वारं त्यजन्ति च महागुणम् ।
सेवक्यश्च सदा भक्त्या त्यजन्ते च परस्त्रियः ।।

पत्न्युवाच- एकप्राणशरीरे च जीवितो मृतया यदि ।
परवाक्यं न मन्येत दृश्यते ह्यात्मचक्षुषा ।।इति।।

अथ सिन्दूराभिमन्त्रणम्-सिन्दूरं च महारक्तंरज्यति च महामनाः।
नीतिः प्रीतिः सदा त्वं च भुक्तिमुक्तिप्रदायकम् ।।
पुत्रपौत्रं यशश्चैव भाग्यं चैव तु पूर्वकम् ।
यदा रिपुक्षयं याति विनाशत् पूर्वकं महान् ।
विना पुण्यं सदा तीर्थं धनं कल्याणपुण्ययोः ।।इति।।

अथ वध्वाः सीमन्ते सिन्दूरं ददाति वरः-ॐ सुमङ्गलीरियंवधूरिमाᳬ शमेत पश्यत। सौभाग्यमस्यै दत्त्वा याथास्तं विपरेतन ।।इति।।

सुपुत्रा सुभगा जीवद्भर्तृकानृत्यमङ्गलम् ।
सिन्दूरशोभितायास्ते मोदश्च शरदः शतम् ।।

अथ वर उपवेशयति-ॐ इह गावो निषिदन्त्विहाश्वाऽइह पुरुषाः। इहो सहस्रदक्षिणोयज्ञऽ इह पुष्पाणि निषीदन्तीति पठति ।

अथ स्विष्टकृत्प्राशान्ते आचमनं, गोदानं, गौर्ब्राह्मणस्य वरः । ग्रामो सराजन्यस्य अश्वो वैश्यस्य। अस्तमिते सूर्ये ध्रुवं दर्शयति वरः। ॐ ध्रुवमसि ध्रुवन्त्वा पश्यामि ध्रुवैधिपोष्ये मयि महत्वादाद् बृहस्पतिर्मया पत्या प्रजावती शञ्जीव शरदः शतम् ।।

अथ सम्बन्धिमेलनं करोति।। प्रतिष्ठामन्त्र-दानम् ।

अथादित्यदुहिता ।। तपसा तेजसा भाविता जटाधरा वल्कलाजिन-संच्छन्ना तपतेति कुमारिका बहूनि वर्षाणि सा तपसा तेजसा तपतीति विख्याता तां संवरणस्तथैकस्मिन्दिवसे नृपवर उद्यन्धनुः सेनयासहितो वने विचरन्धृतातपत्रो ह्यभिगम्य वोचत्तामहे त्वं कस्यासि दुहितेति सा होवाच । यस्यैकचक्रं भुजगनियमितैः सप्ताश्वैर्युक्तमचरणेन सारथिना भ्राजमाने य एष प्रातरुद्यति तस्याऽहं दुहिता। शीर्णामेतिदेवरूपी कुण्डलाभरणो महाबाहुः कस्त्वं भो भवान् केन कामेन मामित्या

दरेण पृच्छतीति सा होवाच तस्या अमृतवद्वाचं निशम्योवाच नृपवरः च सुन्दरी नृपसवर्णोऽहं भार्यामेभव रूपिणीति श्रुत्वा सा होवाच ।। य एवमामजीजनयत्त्वं तेजोराशिमुद्यन्तं भास्करं तत्र गत्वा वृष्णीष्वेति य एतैः कामरज्जुभिः स्तूयमानो वसिष्ठं स्वपुरोहितं भगवन्तं दिवाकरं वृणिष्वेति य गत्वा एतैरेव ऋक्सामयजुर्भिः स्तूयमानो वसिष्ठो यं कामं कामयते दास्यामिति सा होवाच य एष कामो नृपसँवर्णस्तस्यार्थे ते दुहितरं वृणोमि दत्तेति सा होवाच । प्रतिग्रहीतेति वसिष्ठस्तामुवाच मुनिश्रुत्यानन्दपूर्णः प्रतीचीदिशमागत्य तत्सर्वं तस्मै निवेदयामास। स तु निवेदितः सुदिने सुमुहूर्ते सुनक्षत्रे सुयोगे पुण्याहे पाणिं जग्राह पाणिनाऽऽदौकृतमङ्गल उभावध्वर्यूः अन्वारम्भेति कुशैर्लाजैः शमीपलाशैर्मन्त्रैर्घृतेन शमिद्भिर्विधिपूर्वेणकर्मणाहव्यवाहोहूयमानोदेवतानामृषीणां गन्धर्वाणामप्सरसां ध्वनिमङ्गलानि ऋग्यजुः सामाथर्वाङ्गिर-

सेतिहासपुराणादिनृत्यवादित्रगीतैर्विवाहः संवृत्तः । अथ हैमं भानुर्धनं ददौ गोश्वानां दासीनां महिषीणामजादीनां कुञ्जराणाꣳशत ꣳ साहस्रपरिमितरजतं काञ्चनं गृहीत्वा स्वपुर ꣳ रथेन वाजिना युक्तेन गतौ मोदमानौ तपत इति विख्याताꣳसंवरणस्तथैके भो नृपवर शृणु द्विजवाक्यं ब्राह्मणीवत्सलोभव एषा ते दारकदारिकाऽविधवाऽनष्टपुत्राजीववत्साअनुत्तरवादिनी प्रैषकारिणीसत्यवादिनीब्राह्मणीवत्सदेवतोमातर ꣳ संत्यज्य ꣳ पित संत्यज्य भ्रातर ꣳ संत्यज्य भर्तारं चर्चितं सुपूजितं च यथेन्द्रस्येन्द्राणी प्रिया भवति यथा दशरथस्य कौसल्या प्रिया०, यथा रामचन्द्रस्य सीता प्रिया० यथा रावणस्य मन्दोदरी प्रिया०, यथा बालिनश्च तारा प्रिया० यथा वायोश्चाञ्जनी प्रिया०, यथा नलस्य दमयन्ती, प्रिया०, यथा सौदासस्य मदयंती प्रिया०, यथा पुरूरवस उर्वशी प्रिया०, यथा पुरुकुत्सस्य नर्मदा प्रिया०, यथा शन्तनोश्च

गंगा प्रिया०, यथा धृतराष्ट्रस्य गान्धारी प्रिया०, यथा पाण्डोश्च कुन्ती प्रिया०, यथा पाण्डवानां द्रौपदी प्रिया०, यथाऽर्जुनस्य सुभद्रा प्रिया०, यथा भीमसेनस्य हिडम्बा प्रिया०, यथा दुर्योधनस्य भानुमती प्रिया०, यथाऽऽदित्यस्य छाया प्रिया०, यथा गणेशस्य बुद्धिमती प्रिया०, यथाऽगस्त्यस्य लोपामुद्रा प्रिया०, यथा योगेश्वरस्य मैत्रेयी प्रिया०, यथा वशिष्ठस्याऽरुन्धती प्रिया०, यथाऽऽत्रेयस्याऽनसूया प्रिया०, यथा ब्रह्मणः सावित्री प्रिया०, यथा कृष्णस्य रुक्मिणी प्रिया०, यथा पशुपतेरुमा प्रिया०, यथा गौतमस्याऽहिल्या प्रिया०, यथा हिमालयस्य मेनका प्रिया भवन्ति एवमन्येषामप्येवं तुभ्यमहं गृहे यदैव देवकी मेनका जातदुहिता तामेति सा होवाच अविधवा सुभगा कल्याणवती धनवती पुत्रवती यौवनवती यशोवती भव ।। श्रीश्रुतेः०। सदा सुप्रीता वरदा भवन्तु ।। अथातो मङ्गलानीति माहेन्द्री वारुणे उत्तम शोभनानि ।।

त्रैलोक्यदेवताः सर्वा ब्रह्मविष्णुमहेश्वराः ।
एते त्वत्साक्षिणो देवाः त्वं पूर्वं मे स्त्रियो भव ।। स्वस्तिनऽइन्द्रो० ।।
विश्वानिदेव० ।। इत्यादित्यदुहिता ।।

## अथ ग्रह तिलकम् (प्रथम वरं तदैव शेषं वधूम् )

गजाननः प्राशनिरुद्धपाणी रक्ताम्बरो ह्युन्दुरु-वाहनश्च ।
लड्डूकहस्तो हि गणेश्वरोऽपि, वरस्य वध्वा वितनोतु भूतिम् ।।१।।
विघ्नेश्वरो विघ्नविदूरकारी, निर्विघ्नकारी सफलस्वसिद्धिः।
विघ्नेश्वरो नाम सुरेन्द्रपूज्यो वरस्य वध्वा वितनोतु भूतिम् ।।२।।
हंसाधिरूढः सुचतुर्मखश्च, कमण्डलुर्यज्ञपवित्रदेहः ।
इन्द्रादिदेवैरभिपूजितश्च, वरस्य वध्वा वितनोतु भूतिम् ।।३।।

अरुन्धती सत्यवती च कुन्ती, शकुन्तला च द्रुपदात्मजा च ।
सा रोहिणी हेमवती च गङ्गा, वरस्य वध्वा वितनोतु भूतिम् ।।४।।
शंखं गदां चक्रसरोरुहे च, करैर्दधानो गरुडाधिरूढः ।
जगत्पतिर्दिक्पतिपूजितश्च, वरस्य वध्वा वितनोतु भूतिम् ।।५।।
वसन्तलक्ष्मीर्वसुराजलक्ष्मीः, श्रीराजपुत्री कमलायताक्षी ।
श्रीविष्णुपत्नी भुवनैक माता, वरस्यवध्वा वितनोतु भूतिम् ।।६।।
गङ्गाधरो भस्मजटाधरश्च, ललाटचन्द्रो वृषवाहनश्च ।
त्रिशूलखट्वांगधरोमहेशो, वरस्य वध्वा वितनोतु भूतिम् ।।७।।
शिवस्य पत्नी गिरिराजपुत्री अनेकरत्नाम्बररत्नभूषा ।
कल्याणगौरी शुभमङ्गलानि, वरस्य० ।।८।।
श्रीरामपत्नी जनकस्य पुत्री, सीतांगणे सुन्दर-कोमलांगी ।
दिव्याम्बरा रत्नविभूषणा च, वरस्य वध्वा वितनोतु भूतिम् ।।९।।

सिंहाधिरूढ़ा वरदाष्टपाणि-स्त्रिशूलपाशाङ्कितबाहुदण्डा ।
त्रैलोक्यमाता शरणे सुशीला, वरस्य वध्वा वितनोतु भूतिम्॥१०॥
त्वं देव ऋग्वेद सुरक्तवर्णो रक्ताम्बरः केवलनेत्रयज्ञः ।
अत्रिश्च गोत्रो विधिजा च माता, वरस्य वध्वा वितनोतु भूतिम् ॥११॥
वेदो यजुर्वेद- सिताम्बरो यः, शुक्लस्वरूपो विधिरूपमूर्तिः ।
भरद्वाजगोत्रःसावित्री च माता, वरस्य वध्वा वितनोतु भूतिम् ॥१२॥
त्वं सामवेदश्च पीताम्बरो यः, कल्याणब्रह्मैकस्वरूपमूर्तिः ।
लक्ष्मीयुतः काश्यपगोत्रयुक्तो, वरस्य वध्वा वितनोतु भूतिम् ॥१३॥
अथर्ववेदश्च सुकृष्णवर्णः, कृष्णाम्बरः कृष्णस्वरूपमूर्तिः ।
वैखानगोत्रः कमला च माता, वरस्य वध्वा वितनोतु भूतिम् ॥१४॥
त्रिदेवमूर्तिर्जगदेकचक्षुर्विरञ्चिनारायणशम्भुरूपः ।
प्रभाकरश्चाऽखिललोकहेतुर्वरस्य वध्वा वितनोतु भूतिम् ॥१५॥

कलानिधिः कैरवबन्धुवर्गः कम्बूकवर्णः, सुकृतैकहेतुः ।
महौषधीशो रजनीपतिश्च, वरस्य वध्वा वितनोतु भूतिम् ।।१६।।
महीतनूजो महिमातिधीरः, सदा बलीयान् सततं पुराणः ।
हिरण्यवर्णः कनकानिधानो, वरस्य वध्वा वितनोतु भूतिम् ।।१७।।
शशाङ्कसूनुः खलु दिव्यनामा, सुखादिहेतुर्व्यसनोपहारी ।
बुधश्च विज्ञानविचक्षणोऽसौ, वरस्य वध्वा वितनोतु भूतिम् ।।१८।।
समस्तविज्ञानगुरुर्मनीषी, सुरेन्द्रपूज्यः सुजनैकगम्यः ।
बृहस्पतिर्मङ्गलनामधेयो, वरस्य वध्वा वितनोतु भूतिम् ।।१९।।
तेजोधिकश्चाखिलखेचराणां, शुक्रः सुदीप्तः सुरशत्रुपूज्यः ।
यशोधनोऽसौ मृतजीवनश्च, वरस्य वध्वा वितनोतु भूतिम् ।।२०।।
समस्तखेटोपरिमार्गगामी, शनैश्चरः सन्तनमादरेण ।
अस्मिन् सुलग्ने शुभदायकः स्याद्, वरस्य वध्वा वितनोतु भूतिम् ।।२१।।

योधैर्युतोऽद्याऽपि सुधाशनश्च, पर्वण्यसौ चन्द्रमसं च सूर्यम् ।
स्वयं बलात् प्राप्य वरोऽत्र राहु, र्वरस्य वध्वा वितनोतु भूतिम् ॥२२॥
समस्तसम्पत्समवाप्य हेतुः, केतुः प्रपन्नार्तिहरो विलग्ने ।
भूत्वाऽर्द्धरूपः स्थिरसौख्यकर्त्ता, वरस्य वध्वा वितनोतु भूतिम् ॥२३॥
सुधूम्रवर्णोऽखिलसप्तजिह्वः, शाण्डिल्यपुत्रो हि धनञ्जयश्च ।
शृङ्गी च गोत्रो ह्यरणी प्रसूश्च, वरस्य वध्वा वितनोतु भूतिम् ॥२४॥
विष्णुस्वरूपेण नवग्रहाश्च, दुष्टाः शुभाश्चाऽपि सुयज्ञ-सिद्धौ ।
विवाहमाङ्गल्यशुभं च सिद्धिं, वरस्य वध्वा वितनोतु भूतिम् ॥२५॥
सुराश्च सर्वे ग्रहदेवताश्च, सप्तर्षयो दिक्पतयो नगेन्द्राः ।
कुर्वन्तु सर्वे ग्रहराशयश्च, क्षेमं समुद्राःसुरवाहनानि ॥२६॥
यस्याऽऽज्ञया हर्तुमिह प्रभूता, यस्याऽऽज्ञया पूर्णकृतं समर्थाः ।
ते यज्ञमागत्य समस्तभूतिं, प्रतर्प्य गच्छन्तु यथावकाशम् ॥२७॥

सम्पूर्णमेकं तिलकं प्रधानं, सम्पूर्णमेकं भगवत्-पुराणम् ।
शुभलग्नवेलायां विवाहे सौभाग्यं कन्यायाः वरदीर्घायुः भूयात्।।२८।।
लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशव -
श्चंडी ते भुजदण्डयो - र्गुणनिधे गेहे कुबेरस्थितिः ।।२९।।
नित्यं धर्मरतो भव स्वभवने दानप्रमोदावहः ।
सर्वांगे हरिचन्दनश्च भवतः त्वं दीर्घजीवी भव ।।३०।। इति तिलकम् ।

## अथाऽभिषेचनम्

ॐ स्कन्दो गणेशश्च सरस्वती च, ब्रह्मा हरिर्भानुमहेश्वरौ च ।
देवाश्च नागा रविचन्द्रताराः, कुर्वन्तु मन्त्रैरभिषेकशान्तिम्।।१।।
क्षमामयी सत्यधरा धरित्री, वाराणसी शिल्पवनस्पतिश्च।
मृगा विहङ्गा विदिशो दिशश्च, कुर्वन्तु मन्त्रैरभिषेकशान्तिम्।।२।।

मत्स्यो वराहो नरसिंहकूर्मौ, त्रिविक्रमो वामनवासुदेवः ।
कृष्णश्च कल्की भव बौद्धरूपी, कुर्वन्तु मन्त्रैरभिषेकशान्तिम् ।।३।।
गंगादिकालिन्दिसरस्वतीति, गोदावरी सिन्धुसरिच्च नर्मदा ।
विनासरो वेत्रवती सुशब्दा, कुर्वन्तु मन्त्रैरभिषेकशान्तिम् ।।४।।
काशी अवन्ती मथुरा अयोध्या, द्वारावती पुण्यमयी प्रयागः ।
गायत्रिसावित्रिसरस्वती च, कुर्वन्तु मन्त्रैरभिषेकशान्तिम् ।।५।।
दिक्पालनाथा वसुलोकपालाश्चामुण्डमाता मम दुःखनाशाः ।
पीडाविनाशा ग्रहमण्डलाश्च, कुर्वन्तु मन्त्रैरभिषेकशान्तिम् ।।६।।
श्रीयोगिनी वामनदेवता च, हनूमदष्टावसुभैरवाश्च ।
नक्षत्रयोगग्रहराशिलग्नाः, कुर्वन्तु मन्त्रैरभिषेकशान्तिम् ।।७।।

## अथ चतुर्थीकर्म

विशेषेणोदकपात्राच्छादनम् आहुतिभिः० प्रजापतय० इत्यादि

पञ्चवारुणिहोमपूर्वकम् ।। ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा। ॐ इन्द्राय स्वाहा इदमिन्द्राय०।।ॐ अग्नये स्वाहा इदमग्नये०।। ॐ भूर्भुवः स्वः स्वाहा इदं वावये०।। ॐ सोमाय स्वाहा इदं सोमाय०।। त्वन्नो०, सत्वन्नो०,अयारचाग्ने०, येतेशतं०, उदुत्तमं० इमम्मे०, तत्त्वायामि० भवतन्न० इत्यष्टौ पुरस्तात् ।ॐ अग्नेप्रायश्चित्तेत्वन्देवानांप्रायश्चित्तिरसिब्र ह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा इदमग्नये ।।१।। ॐ वायो प्रायश्चित्तेत्वन्देवानां प्रायश्चित्तिरसि ब्र ह्मणस्त्वानाथकाम उपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा इदं वायवे ।।२।। ॐ सूर्य प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसिब्र ह्मणस्त्वानाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ।। इदं सूर्याय ।।३।। ॐ चन्द्र प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसिब्र ह्मणस्त्वानाथकाम उपधावामि

यास्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा इदं चन्द्राय ।।४।। ॐ गन्धर्वं प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसिब्र ह्मणस्त्वा नाथकाम उपधावामि यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा इदं गन्धर्वाय।।५।। ॐ सर्वप्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्र ह्मणस्त्वा नाथकाम उपधावामि या स्यै पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नीयशोघ्नीनिन्दितातनूर्जारघ्नी त्वमस्यै नाशय स्वाहा ।। इदं सर्वप्रायश्चित्यै ।।६।।

अथ स्थालीपाकस्य जुहोति ।। ॐ प्रजापतये स्वाहा ।। ॐ अग्नये स्विष्टकृते स्वाहा ।। ॐ भूर्भुवःस्वःत्वन्नो०, सत्वन्नो०, अचाश्चाग्ने०, येतेशतं०, उदुत्तमं०, हुत्वा हुत्वैतासाम् इत्याहुतीनां चतुर्दशानामुदकपात्रे संस्त्रवान्त्समनीय। ततः कन्यां मूर्द्धन्यभिषिञ्चति।। यातेपतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नी तत एनांकरोमि सा जीर्यत्वं मया सहासाविति अथैनां॑स्थालीपाकं प्राशयति प्राणैस्ते

प्राणान्संदधाम्यस्थिभिरस्थीनि माꣳसैमाꣳसानि त्वचा त्वचमिति ।।

अथ हृदयालम्भनं करोति वरः कन्यायाः दक्षिणां समधि० ।
ॐ मम व्रते ते हृदयं दधामि, मम चित्तमनुचित्तन्ते अस्तु,मम वाचमेकमना जुषस्व, प्रजापतिष्ठा नियुनक्तु मह्यम् ।। मन्त्रं पठति-ॐ यत्ते सुसीमे हृदयन्दिवि चन्द्रमसि श्रितम् । वेदाहं तन्माँतद्विद्यात् पश्येम शरदः शतञ्जीवेम शरदः शत ६ शृणुयाम शरदः शतम् ।।

।। इति चतुर्थीकर्मसहित वासिष्ठिविवाहविधिः समाप्तः।।

प्राप्तिस्थान :
श्री दुर्गा साहित्य भण्डार
पो. बॉ. १०९६,
नेपाली खपड़ा, वाराणसी-२२१००१

इति



# वसिष्ठी विवाह पद्धति

॥ समाप्ता ॥

प्रकाशक

श्री दुर्गा साहित्य भण्डार

पो० बा० नं० १०६६, नेपाली खपड़ा

वाराणसी (यू० पी०)

सं० 2066

आवरण मुद्रक : त्रिमूर्ती प्रिण्टर्स, कर्णघण्टा, वाराणसी, मो० ९८३९८०३१९५